న తు సురత-సుఖేభ్యః ఛిన్న-తృష్ణః బభూవ
జ్వలనః ఇవ సముద్ర+అన్తః+గతః తత్+జలేషు ॥

**అన్వ :** తత్ర సమదివసనిశీథం సంగినః శమ్భోః సాగ్రమ్ ఋతూనాం శతమ్ ఏకా నిశేవ అగమత్. తు సముద్ర+అన్తర్గతః జ్వలనః తజ్జలేషు ఇవ సురత+సుఖేభ్యః ఛిన్న-తృష్ణః న బభూవ.

**ప్ర :** తత్ర = అక్కడ, సమ-దివస-నిశీథమ్ = పగలూ, రేయీ ఒకటిగా, సంగినః = (విషయాలపై) ఆసక్తి గల, శమ్భోః = పరమేశ్వరునకు, సాగ్రమ్ = తుదవరకు, ఋతూనామ్ = ఋతువులయొక్క, శతమ్ = వంద, ఏకా = ఒక్క, నిశా+ఇవ = రాత్రి వలె, అగమత్ = గడిచిపోయింది. తు = కానీ, సముద్ర+అన్తర్గతః = కడలిలోనున్న, జ్వలనః = అగ్ని (బడబ), తత్+జలేషు ఇవ = ఆ నీటి విషయంలో వలె, సురత+సుఖేభ్యః = రతి సుఖాలనుండీ, భిన్న-తృష్ణః = కోరికలంతరించినవాడుగా, న బభూవ = కాలేదు.

**తా :** పగటికీ, రేయికీ తేడా లేకుండా విషయాసక్తుడై వున్న పరమేశ్వరునకు నూరు ఋతువుల కాలం పూర్తిగా ఒక్క రాత్రిలా గడచిపోయింది. కానీ సముద్రంలోని బడబాగ్నికి ఆ జలాలపై కోరిక తొలగిపోనట్లు పరమేశ్వరునకు సురతసుఖాలపై కోరిక తెగిపోలేదు.

**విభక్తులు - క్రియలు :** 1. సమదివసనిశీథమ్ : ..**నిశీథం** - నిశీథే - నిశీథాని; సమదివసనిశీథశబ్దః అకారాన్తః నపుంసకలింగః ప్రథమైకవచనమ్; 2. సంగినః : **సంగినః** - సంగినోః - సంగినామ్; సంగిన్‌శబ్దః నకారాన్తః పుంలింగః షష్ఠ్యేకవచనమ్; 3. తత్ర - అవ్యయమ్; 4. శమ్భోః : **శమ్భోః** - శమ్భ్వోః - శమ్భూనామ్; శమ్భుశబ్దః ఉకారాన్తః పుంలింగః షష్ఠ్యేకవచనమ్; 5. శతమ్ : **శతం** - శతే - శతాని; శతశబ్దః అకారాన్తః నపుంసకలింగః ప్రథమైకవచనమ్; 6. అగమత్ : **అగమత్** - అగమతామ్ - అగమన్; గమ్లుధాతోః లుఙి ప్రథమపురుషైకవచనమ్; 7. సాగ్రమ్ - అవ్యయమ్; 8. ఏకా - ఏకా - స్త్రీలింగే నిత్యైకవచనమ్; 9. నిశా : **నిశా** - నిశే - నిశాః; నిశాశబ్దః ఆకారాన్తః స్త్రీలింగః ప్రథమైకవచనమ్; 10. ఇవ - అవ్యయమ్; 11. న - అవ్యయమ్; 12. చ - అవ్యయమ్; 13. సురతసుఖేషుచ్ఛిన్నతృష్ణః : ...**తృష్ణః** - తృష్ణౌ - తృష్ణాః; సురతసుఖేషుచ్ఛిన్నతృష్ణశబ్దః అకారాన్తః పుంలింగః ప్రథమైకవచనమ్; 14. బభూవ : **బభూవ** - బభూవతుః - బభూవుః; భూ సత్తాయామ్ ధాతోః లిటి ప్రథమపురుషైకవచనమ్; 15. జ్వలనః : **జ్వలనః** - జ్వలనౌ - జ్వలనాః; జ్వలనశబ్దః అకారాన్తః పుంలింగః ప్రథమైకవచనమ్; 16. సముద్రాన్తర్గతః : **అన్తర్గతః** - అనప్తర్గతౌ - అన్తర్గతాః; సముద్రాన్తర్గత శబ్దః అకారాన్తః పుంలింగః ప్రథమైకవచనమ్; 17. తజ్జలేషు : జలే -

జలయోః - **జలేషు**; జలశబ్దః అకారాన్తః నపుంసకలింగః సప్తమీబహువచనమ్.

**సంధులు :** 1. సంగినః+తత్ర = సంగినస్తత్ర - విసర్గసంధి; 2. నిశా+ఇవ = నిశేవ - గుణసంధి; 3. జ్వలనః+ఇవ = జ్వలనివ - విసర్గలోపసంధి; 4. గతః+తత్ = గతస్తత్ - విసర్గసంధి.

**సమాసాలు :** 1. సమౌ దివసనిశీథౌ యస్మిన్ తత్, సమదివసనిశీథమ్ (దివసః నిశీథశ్చ దివసనిశీథౌ); 2. సురతే సుఖం తదేవ ఇషుః తేన ఛిన్నా తృష్ణా యస్య సః, సురత-సుఖేషుచ్ఛిన్నతృష్ణః; 3. సముద్రస్య అంతః తస్మిన్ గతః, సముద్రాన్తర్గతః; 4. తచ్చ తత్ జలమ్, తేషు, తజ్జలేషు.

**ఉపమాలంకారం :** సముద్రంలోని జ్వలనుడు **బడబ**. బడబాగ్ని సముద్రంలోనే ఉండి సముద్రజలాలతో ఆరనట్లు పరమేశ్వరునిలోనూ విషయతృష్ణ ఆరలేదని పోలిక. బడబాగ్నితో పోలిక ద్వారా ఎప్పుడో ఒకప్పుడు బడబ చల్లారినట్లు శివునిలోని తృష్ణ కూడా ఆరుతుందని సూచన అని వివరణ వ్యాఖ్య. కానీ అది సముచితమనిపించదు.

ఎందుకంటే బడబాగ్ని చల్లబడినట్లు ఎప్పుడూ వినలేదు. మహాప్రళయం వంటివి సంభవిస్తే కానీ ఆ స్థితి రాదు. కాబట్టి ఆ పోలిక అప్పటి పరమేశ్వరస్థితికి రూపకల్పనమే కానీ దాని ఉపశాంతికి ద్యోతకం కాదు.

కుమారసంభవకావ్యంలో ఆధికారికఫలం కుమారోత్పత్తి. కుమారోత్పత్తి ఫలం తారకాసుర సంహారం. అది దేవతలు ఆశించిన ఫలం. అయితే అక్కడ దేవతలు నాయకులు కారు. నాయకుడు పరమశివుడు. అంటే పరమశివుని ఫలం దేవతల ఫలమే. అందులో ఫలాపేక్ష పరమేశ్వరునిలో లేదు. కర్మను ఆసక్తితో పాటిస్తూ కూడా కర్మఫలంమీద అనాసక్తిని ప్రదర్శింపగలగటం కర్మయోగం. అందుకు పరమేశ్వరుడు పరమయోగి. గైహికప్రవృత్తి దేవతలకోసం, మానవులకోసం.

**ఇతి మహాకవి శ్రీకాలిదాసకృతౌ కుమారసమ్భవే మహాకావ్యే**
**"ఉమాసురతవర్ణనమ్" నామ అష్టమః సర్గః.**

**శ్రీః**

## అనుబంధం - 1

# అకారాది శ్లోకానుక్రమణిక





## అనుబంధం - 2

## లోకోక్తులు

| | | |
|---|---|---|
| 1. | భర్తృవల్లభతయా | 12 |
| 2. | యేన పూర్వముదయే | 44 |
| 3. | ధిఙ్మహత్త్వమసతాం | 57 |
| 4. | విక్రియా న ఖలు | 65 |
| 5. | నూనమాత్మసదృశీ ప్రకల్పితా | 66 |



## అనుబంధం - 3

## కుమారసంభవ-మహాశివపురాణయోః సామ్యనిదర్శకః సందర్భః

| కుమారసంభవమ్ | మహాశివపురాణమ్ (పార్వతీఖండమ్) |
|---|---|
| 1. పాణిపీడనవిధేరనన్తరం.... | శయ్యాం రతికరీం కృత్వా పుష్పచందన చర్చితామ్। |
| కామదోహదసుఖం మనోహరమ్ | అద్భుతాం తత్ర పరమాం భోగవస్త్వన్వితాం శుభామ్ । |
| 2. సమదివసనిశీథం సంగినస్తత్ర... | స రేమే తత్ర భగవాఞ్శమ్భుర్గిరిజయా సహ । |
| బభూవ జ్వలన ఇవ సముద్రాన్త- | సహస్రవర్షపర్యంతం దేవమానేన మానదః । |
| ర్గతస్తజ్జలౌఘైః | హరే భోగప్రవృత్తే తు లోకధర్మప్రవర్తినీ । |
| | మహాన్ కాలో వ్యతీతాయ తయోః క్షణ ఇవానఘ! । |
| | దివ్యం వర్షసహస్రం చ శంభోః సంభోగకర్మతత్ । |

మా

అల్లుడు

కీ॥శే॥ కావూరి శ్యామ్‌సుందర్

(02.06.1973 - 31.05.2019)



స్మృత్యంకముగా

డా॥ సూరం శ్రీనివాసులు

# अष्टमः सर्गः ।

पाणिपीडनेत्यादि । अथ (शैलराजदुहितुः) पार्वत्याः (हरं) शिवं प्रति (पाणिपीडनविधेः अनन्तरं) करग्रहणानन्तरं (कामदोहदसुखं) कामदोहदेन मन्मथाभिलाषेण सुखं[१] (मनोहरम्) उपजोषरम्यम्[२] अभूत् । कुतः । (भावसाध्वसपांरग्रहात्) भावसाध्वसयोः प्रीतिभीत्योः परिग्रहादाश्रयणात् । स्वाभाविकं हि तत्रोमाया नवोढत्वात्तु साध्वसम् । अस्मिन्सर्गे रथोद्धतावृत्तम् ।।१।।

१. सुरतम्-ल. न., अस्मिन् सर्गे मुद्रितशारदायां प्रायः भिन्नः पाठः दृश्यते।

व्याहृता प्रतीत्यादि ।। सा गौरी (तथा अपि) एवंविधाऽपि (पिनाकिनः) शूलिनः (रतये) प्रीत्या एव आसीत् । सा हि व्याहृता प्रश्नाय प्रश्नं चोदित्रा[१] (प्रतिवचः) प्रतिवचनं न (संदधे) ददाति । (अवलम्बितांशुका) आश्रितवसना गन्तुम्[२] (ऐच्छत्) इच्छति । (शयनं) शयने च (पराङ्मुखी) परावृत्य (सेवते स्म) आस्ते । तथापि हरस्य प्रीतिमकरोत् । नवोढायाः साध्वसस्यैवालंकारत्वात् । तदुक्तम्- 'दृष्टा दृष्टिमधो ददाति' इत्यर्थः ।।२।।

१. नोदिता - ल. २. 'यातुम्' - अपा, - ल.

कैतवेनेत्यादि ।। (पार्वती) गौरी कूतूहलात् कर्णनिहितं चक्षुः (विद्युदाहतं) तडिदाहतम् इव न्यमिलयत्, पिदधौ । यतः कैतवेन व्याजेन (शयिते) सुप्ते सति प्रिये विक्ष्य किमेषा करोतीति । ततस्तस्मिन् सस्मितं चक्षुः उन्मिषति सति विकसिताक्षे । यावदेव सा वीक्षितुमारब्धा तावदीश्वरो हसन्नेत्रमुदमीलयत् ।। ततः सा विद्युतेव आहतं[१] स्वचक्षुः (न्यमीलयत्) समकोचयत्[२] ।।३।।

१. निहतम् - ल. २. 'समकोचयत्' नास्ति - ल. न.

नाभिदेशेत्यादि ।। (सकम्पया) स्पन्दमानया (तया) उमया (शंकरस्य) पत्युः (करः) पाणिः रुरुधे अवष्टभ्यत यतः (नाभिदेशविहितः) नाभिदेशे श्रोणीभागे निक्षिप्तः । अथ च कररोधेऽपि (तन्नितम्बं) तज्ञघनं स्वयम् एव दूरम् अत्यर्थम् उच्छ्वसितनीविबन्धनं श्लथोच्चयग्रन्थनम्[१] (अभवत्) आसीत् । [२]पाणिस्पर्शेनैव शरीरोच्छ्वासात् ।।४।।

१. ग्रन्थिः - न. व. २. 'पाणि...श्वाच्छ्वासात्' - नास्ति - ल. न.

ऐवमालीत्यादि ।। सा सखीभिः इत्थम् उपदिष्टं (प्रमुखवर्तिनि) सम्मुखासीने (प्रिये) वल्लभे (व्याकुला) व्याकुलत्वात् (न अस्मरत्) विसस्मार[1] । किमुपदिष्टमित्याह। हे आलि । सखि निगृहीतसाध्वसं भयमपहाय[2] (शङ्करः) प्रियः त्वया एवं (सेव्यताम्) आवर्जयितव्य इति । एवमिति यस्ताभिरुक्तो विधिः स बोद्धव्यः । उपदिष्टमिति भावः ।।५।।

१. व्यस्मरत् - ल.  २. 'रहसि एकान्तरे शयने' - अपा. - ल. न.

अप्यवस्तुनीत्यादि ।। (प्रश्नतत्परं) पृच्छन्तं प्रियं पार्वती (वीक्षितेन) दृष्ट्या (परिगृह्य) गृहीत्वा (मूर्धकम्पमयं) शिरःकम्पेनास्य उत्तरं ददौ । न च वचसा, शालीनत्वात्। कीदृशं तम् । (अपि अवस्तुनि) अप्रयुज्यमानेऽप्यर्थे प्रेमतत्परं लम्बटम्[1] । किमर्थम् । कथाप्रवृत्तये प्रश्नव्याजेनानया सह मे कथा प्रवर्ततामिति । सा त्वधाष्टर्यादभिनयेन तमुत्तरयति ।।६।।

१. प्रश्नलम्पटम् - ल.

शूलिनः करेत्यादि ।। रहसि (हृतांशुका) हृताम्बरत्वात् प्रियस्य (करतलद्वयेन) पाणिद्वयेन (नयने) नेत्रयुग[1] (संनिरुध्य) पिधायाऽपि मोघयत्नविधुरा निष्फलोद्यमाकुला (अभूत्) अभवत् । यतः तस्य (ललाटलोचने) तृतीयेऽक्षिण पश्यति । न हि तया तत्सन्निरुद्धम् ।।७।।

१. ०युग्मम् - ल. न.

चुम्बनेष्वित्यादि ।। तस्य (प्रभोः) ईश्वरस्य वधूरतं नवोढानिधुवनं (दुर्लभप्रतिकृतं) कृतप्रतिकृतरहितत्वात् (क्लिष्टमन्मथं) कदर्थितमदनम् अपि प्रियं रन्तुमावर्जकं लज्जाया भू एव षणत्वात् । तदेव दुर्लभप्रतिकृतत्वमाह-चुम्बनेषु (अधरदानवर्जितम्) अधरार्पणहीनम्। (अदयोपगूहने) निर्दयालिङ्गने (सन्नहस्तम्) उदासीनकरम् । प्रियकृते ह्यधरदाने कण्ठाश्लेषे चौष्ठार्पणं प्रत्यालिङ्गनं च कार्यम् । तच्चाऽसौ नववधूत्वान्न चकार ।।८।।

यन्मुखग्रहणमित्यादि ।। (प्रियस्य) कान्तकृतं (मुखग्रहणं) वक्त्रपानं यत् (अक्षताधरम्) अखण्डितोष्ठं यत् च (दानं) कररुहदानं (अव्रणपदं) अकृतक्षतं यत् च अन्यत् मुष्टिदानादिकं (रतं) सदयं तत् (पार्वती) गौरी (विषहते स्म) सेहे न तु इतरत् विपरीतं खरम् ।।९।।

रात्रिवृत्तमित्यादि ।। सा गौरी (प्रभातसमये) प्रत्युषसि[1] (रात्रिवृत्तं) निशाव्यापारम् (अनुयोक्तम् उद्यतं) पिपृच्छिषुं (सखीजनम्) आलिलोकम् (अपकुतूहलम्) अपगतकौतुकं[2] न (अकरोत्) व्यधात् । अथ च (हृदयेन) चेतसा तत् (शंसितुं) कथयितुं तत्वरे त्वरांचक्रे, वक्तुमियेषेत्यर्थः । एवंविधो ह्येष नवोढास्वभावः ।।१०।।

१. प्रत्यूषः काले - ल. न.   २. ०कौतूहलम् - ल. न.

दर्पणे चेत्यादि ।। सा देवी (दर्पणे) मुकुरतले (परिभोगदर्शिनी) अधरखण्डनादिकं प्रियोपभोगं द्रष्टुं प्रवृत्ता सती पृष्ठतः पश्चाद्भागे गुप्तं (निषेदुषः) निषण्णस्य (प्रणयिनः) कान्तस्य बिम्बं पुरः (आत्मनः अनुबिम्बं) आत्मबिम्बनिकटे दर्पणसंकान्तं (प्रेक्ष्य) विलोक्य कानि कानि[1] वर्णयितुमशक्यानि वस्तूनि (लज्ञया) ह्रिया न (चकार) व्यधात् । बिम्बस्य समीपे अनुबिम्बम्[2] ।।११।।

१. 'अपि' -अपा. -ल. न.

२. 'च पूर्वापेक्षया समुच्चये । एवमन्यत्र'-अपा. -ल. न.

नीलकण्ठेत्यादि ।। ततो जननी मेना सुतां (नीलकण्ठपरिभुक्तयौवनां) हरोपभुक्ततारुण्यां आलोक्य समाश्वसत् । (हि) यस्मात् (वधूजनः) सुवासिन्यः (भातुः) मात्दृणां (भर्तृवल्भतया) पतिप्रियतया (मानसीं शुचं) हृदयदुःखम् (अस्यति) अपहरन्ति समाश्वसदित्यगार्ग्यगालवयोः ।।१२।।

वासराणोत्यादि ।। स्थाणुना भवेन (कतिचित्) कतिपयानि (वासराणि) दिनानि (प्रिया) गौरी (कथञ्चन) कथञ्चित् क्लेशेन पदम् अकार्यत स्थितिमग्राह्यत विश्रम्भं कारिता । अनन्तरं (ज्ञातमन्मथरसा) अनुभूतमन्मथरसास्वादात् (शनैः शनैः) क्रमेण सा (रतिदुःखशीलतां) रतौ सुरते दुःखशीलतां कष्टस्वभावत्वं (मुमोच) अत्याक्षीत् । कामसुखानुभावात् सुरतं क्लेशापहमभूदित्यर्थः । पदमिति पदस्थैर्ये । अकार्यत इति ण्यन्तात् कर्मणि ।।१३।।

सस्वजे प्रियमित्यादि ।। (उरोनिपीडितम्) यत्र तत् तथा कृत्वाऽसौ गाढं (प्रियं) वल्लभं (सस्वजे) आश्लिष्यत् । तेन चुम्बनाय गृहीतं (मुखं) वक्त्रं न अहरत् नान्यतश्चकार । तथा (मेखलाप्रणयलोलतां) मेखलाप्रणये रसनाप्रार्थने जघनाम्बरग्रहणे चटुलत्वं गतं (हस्तं) प्रियपाणिं (शिथिलं) मनाग् (रुरोध) अवष्टभ्नात् अवारयत् । पूर्वं त्वेतद् विपरीतमखिलमासीत् ।।१४।।

हावसूचितमित्यादि ।। ततः (कैश्चिदेव) कतिपयैरेव (दिवसैः) अहोभिः तयोः दम्यत्योः एवंविधं प्रेम रूढम् इति प्रीतिरुत्पन्ना । कीदृशम् । (हावसूचितं) हावेन चेष्टाविशेषेण सूचितं कथितम् (चादुमत्) प्रियवचोऽन्वितम् । (क्षणवियोगकातरं) क्षणमात्रविरहेण च कातरमधीरहृदयाभिप्रायसूचकचेष्टाविशेषो भावः ।।१५।।

तं यथात्मेत्यादि ।। सा देवी तं पतिं (आत्मसदृशम्) आत्मानुरूपं यथा येन प्रकारेण अन्वरज्यत अस्निह्यत तथैव सोऽपि तां जायामिति । समानरागत्वकथनम् । एतदेव दृष्टान्तेन द्रढयति । (सागरात्) सागरवर्जं हि (जाह्नवी) गङ्गा (अनपगा) अन्यत्र क्वचिन्न प्रसरति[१] । सोऽपि अब्धिः तन्मुखरसैकनिर्वृतिः तस्या जाह्नव्या मुखरसेन वक्त्रेणोदकेन एका निर्वृतिरुल्लासो यस्य स तथोक्तः । न हि गङ्गातोऽन्यया सरिता असौ पूरयितुं शक्यः । रक्तयोश्च दम्पत्योरन्योन्यमुखपाननिवृत्तिरन्यत्र वा न पानत्वमुचितम् । अन्वरज्यत इति कर्तरि सकर्मकत्वाच्च तमिति कर्मसम्बन्धः । केचित्तु तमनु तं प्रति कर्मप्रवचनीयमाहुः[२] ।।१६।।

१. प्रविशति - ल.

२. सहासनसहशयनसहभोजनाच्छदनपानसमानदुःखसुखसहजीवितमरणेषु समानम् । इति टिप्पण्यामधिकपाठः - भ - १

शिष्यतामित्यादि ।। निधुवनोपदेशिनः सुरतोपाध्यायस्य (शङ्करस्य) हरस्य[१] रहसि शिष्यतां (प्रपन्नया) प्राप्तया यद् सुवतिनैपुण्यं स्त्रीकौशलं (शिक्षितम्) अभ्यस्तम्। तदेव गुरुदक्षिणीकृतं हराय प्रतीपं दत्तम् । सर्वस्यैव तस्य तत्र प्रयोगात् । अन्तेवासिना हि गुरवे दक्षिणा देया[२] ।।१७।।

१. वरस्य - ल. न.　　　२. 'समाप्तविद्येन सता' - अपा. - ल. न.

दष्टमुक्तमित्यादि ।। प्रियेण (दष्टमुक्तं) पूर्व दष्टं खण्डितमनन्तरं तं मुक्तम् (अधरोष्ठम्) अधोऽधरम् (अम्बिका) गौरी शीतलेन (मौलिचन्द्रशकलेन) शिरःशशिशकलेन क्षणं निरवापयत् समाश्वसत्[१] इति प्रौढाव्यापारकथनम् । (वेदनाविधुतहस्तपल्लवा) अधरदष्टेन या वेदना तया विधुतहस्तपल्लवा कम्पितकरकिसलयेत्यम्बिकाविशेषणम् ।।१८।।

१. 'शीतीचकारेत्यर्थः' - अपा. - ल. न.

चुम्बनादलकेत्यादि ।। न केवलं गौर्योष्ठं शिवः शशिना निरवापयत् ।

यावत्सोऽपि (चुम्बनादलकचूर्णरूषितं) चुम्बनवशादलकस्थेन[1] चन्दनादिक्षोदेन पीडितं (ललाटजं नयनं) तृतीमयक्षि (पार्वतीवदनगन्धवाहिने) पार्वत्या वदनमुखमारुताय ददौ अर्पयत् । मुखफूत्कारेणाक्ष्णोः नीरजस्कत्वापत्तेः (उच्छ्वसत्कमलगन्धये) उच्छ्वसत् विकसद्यत्कमलं तस्येव गन्धः सौरभं यस्य तस्मै । उपमानाच्च (पा. सू. ५-४-१३७) इतीत्वम् ।।१९।।

१. कुटिलकेशस्थेन - ल. न.

एवमिन्द्रियेत्यादि ।। (एवम्) इत्थम् (उमया) प्रियया[1] (सह) साकं (वृषध्वजः) ईश्वरः (शैलराजभवने) श्वशुरगृहे मासमात्रम् (अवसत्) अतिष्ठत् । (इन्द्रियसुखस्य वर्त्मनः) हृषीकाणां सुखकारि यद् वर्त्म मार्गो युवत्यादिकः तत् (सेवनात्) उपभोगात् (अनुगृहीतमन्मथः) अनुगृहीतो[3] मन्मन्थो[4] येन ।।२०।।

१. 'गौर्या' - अपा. -ल. न. २. 'कीदृशः' - अपा. -ल.
३. 'प्रसादिनः' - अपा. -ल. न. ४. कामः - ल. न.

सोऽनुमान्येत्यादि ।। ततः (सः) हरः[1] (आत्मजाविरहदुःखपीडितं) दुहितृविरहदुःखितं (हिमवन्तं) श्वशुरं (अनुमान्य) समाश्वास्य (अप्रमेयगतिना) वेगवाहिना (ककुद्मता) वृषभेण (संपतन्) व्रजन् (तत्र तत्र) तेषु वक्ष्यमाणेषु दिव्योद्यानेषु (विजहार) चिक्रीड । अनुमान्य अनुज्ञां दापयित्वेत्यर्थः ।।२१।।

१. भवः - ल. न.

मेरुमेत्येत्यादि ।। ततो देवः (मेरुं) मेरुपर्वतम् पत्य[1] निधुवनैकसक्तः स हेमपल्लवविभङ्गसंस्तरां सौवर्णकिशलयशकलशयनायां (क्षपां) निशाम् (अन्वभूत्) बुभुजे। (मरुदाशुवाहनः) मरुद्वदाशु[2] शीघ्रो वाहनं वृषभो[3] यस्य । (पार्वतीस्तनपुरस्कृतः) पार्वतीस्तनाभ्यां[4] पुरस्कृतोऽग्रतो विहितः पश्चात् तस्या अवस्थानादिति । अतश्च कृती पुण्यमाक्[5] निजकान्ताकुचकलशक्षेपणाद्याधारशृङ्गाररसमनुभवति । तदुक्तं -

शुकैश्चञ्चूत्कीर्णं छविफलयुगं यौवनतरो-
रयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् ।
समुद्रं सम्भोगामृतकलशयुग्मं सुकृतिनः
स्तनद्वन्द्वं तस्या नवनभमुखाङ्कं विजयते[6] ।।२२।।

१. 'आगत्य' - अपा. -ल. २. 'वायुवदा'० - अपा. -ल.
३. 'वृषभो' - नास्ति - ल. ४. गौरीकुचाभ्यां - ल.
५. 'प्रियापयोधरसंपर्कात् । संस्तीर्यत इति संस्तरस्तल्पम्' - अपा. - ल.
६. 'निजकान्ता... विजयते' - नास्ति -ल.

पद्मनाभेत्यादि ।। कदाजिदसौ प्रियामुखं पिबन् (मन्दरस्य कटकेषु) मन्दरगिरिनितम्बेषु अवसत्[१] । कीदृशेषु । (नवाः) प्रत्यग्रान् (अमृतविप्रुषः) पीयूषबिन्दून् (प्राप्तवत्सु) आसादितवत्सु मन्थाचलत्वात्[२] । अत एव (पद्मनाभवलयाङ्किताश्मसु) विष्णोः वलयैर्कटकैर्वा[३]ङ्कितासु सुचिह्नितोपलेषु मन्थानीकृत्य तद् बाहुयुग्मस्योपयोगात्कट-काङ्कितत्वम् ।।२३।।

१. 'तस्थौ' - अपा. -ल. २. मंथरगिरित्वात् -ल. न.
३. चरणैर्वलयैर्वा -ल. न.

रावणध्वनितेत्यादि ।। कदाचिदसौ (एकपिङ्गलगिरौ) वैश्रवणाद्रौ कैलाशे (विशदाः) निर्मलाः (शशिप्रभाः) चन्द्रिकाः निर्विवेश उपबुभुजे । कीदृशः । (रावणध्वनितभीतया) दशमुखविरावत्रस्तया (तया) गौर्या (कण्ठसक्तघनबाहुबन्धनः) कण्ठे सक्तं घनं निबिडं बाहुबन्धनं भुजपाशो यस्य । रावणेन हि पूर्वमुन्मूलप्रेक्षया[१] कैलाशः कम्पितोऽभूत् । तत्काले च रावणस्यापि चिरन्तनत्वात् तत्सद्भावः । [२]दशमुखचीत्कारत्रस्तया तत्कालेऽपि रावणस्य चीत्कृतसम्भवो हरपादाङ्गुष्ठनिपीडित-कैलाशपीठत्वात्[२] ।।२४।।

१. उन्मूलेच्छया -ल. २. 'दश...त्वात्' - नास्ति -ल.

तस्य जातमलयेत्यादि ।। तस्य (जातमलयस्थलीरतेः) उत्पन्नमलयाद्रितटीप्रोतेः (दक्षिणानिलः) मन्दरशैलमारुतः (प्रियाक्लमं) प्रियाखेदं (चाटुकारः) सेवकः इव आचचाम पपौ ।। मलयमन्दरौ ह्यन्योन्यसम्बद्धौ । कीदृक् (धूतचन्दनलतः) वातोद्धूताः कम्पिताश्चन्दनलता येन । तथा (सलवंगकेसरः) सह लवंगकुसुमकेसरैर्वर्तते यः स सलवंगकेसरः इति सौगन्धोक्तिः । क्लमोऽत्र किं दैव्या देवस्य चेति चर्च्यमेतत् ।।२५।।

हेमतामरसेत्यादि ।। (उमा) गौरी जलक्रीडार्थं (खे तरङ्गिणीं) नभोनदीं (व्यगाहत) व्यलोडयत् । कीदृशी । (हैमतामरसताडितप्रिया) कनक[१] कमलैराहतः प्रियो यया । तथा (तत्कराम्बुविनिमीलितेक्षणा) तस्य कान्तस्य कराम्बुभिः पाणिप्रक्षिप्तपानीयैः

स्थगिताक्षी[२] (मीनपङ्क्तिपुनरुक्तमेखला) मत्स्यावलिरेव पुनरुक्ता द्वितीया रसना यस्याः, श्रोणीदेशे परिवृत्य स्थितत्वात् ॥२६॥

१. सुवर्ण० -ल. २. स्थगितलोचना -ल.

तामित्यादि ॥ तां कान्तां (पुलोमतनयालकोचितैः) शचीकेशपाशायोग्यैः पारिजातकुसुमैः (प्रसाधयन्) अलङ्कुर्वाणः (अयुग्मलोचनः) त्रिनेत्रः (सस्पृहं) साभिलाषं (सुरवधूभिः) नाकललनाभिरिन्द्राण्यादिभिः (ईक्षितः) अवलोकितः[२] । पुण्यवत्येषा यस्याः सर्वेश्वरोऽपि चाटुकृदिति ॥२७॥

१. 'मण्डयन्' - अपा. -ल. २. 'चिरं दीर्घकालमवलोकयत्' - अपा. -ल.

इत्यभौममित्यादि ॥ अभौमं दिव्यं पार्थिवं नृलोकजं च सुखम् इत्थं (शंकरः) ईश्वरः (वनितासखः) देव्या सह (अनुभूय) संसेव्य कदाचित् अस्तमयवशात् (लेहितायति) अरुणायमाने (आतपे) सूर्यातपे स्ववसतिं गन्धमादनगिरिं (न्यवर्तत) प्रत्याययौ । अलोहितो लोहितो भवति लोहितायति । प्रत्यागमनमपि निवृत्तिः । यथा-

प्रोषितायां व्रजन्त्यस्तं प्रजाधर्मो यशः सुखम् ।
निवर्तन्ते निवृत्तायामहो बन्धुः कुलं गृहस्[१] ॥२८॥

१. कुलाङ्गनाः -ल. न.

तत्र काञ्चनेत्यादि ॥ तत्र कैलाशोपवने (काञ्चनशिलातलाश्रयः) कनकशिलापृष्ठमध्यास्य नेत्रगम्यं (भास्करं) सुदर्शनमर्कम् अवलोक्य (दक्षिणेतर-भुजव्यपाश्रयां) वामपार्श्वस्थां (सहधर्मचारिणीं) भार्यामीश्वरः (व्याजहार) जगाद[१] ॥२९॥

१. 'उवाच । दक्षिणेतरो वामः स चासौ करश्च दक्षिणेतरो भुजः, तस्य व्यपाश्रयः आश्रय आधारो यस्याः । किमित्याह' - अपा - ल. न.

पद्मकान्तिमित्यादि ॥ (अरुणत्रिभागयोः लोहितापाङ्गयोः (संक्रमय्य) निक्षिप्येव। (पद्मकान्तिं)[१] पद्मनां विच्छायत्वात् च नेत्रयोः च सानुरागत्वादित्थमूहः । प्रजेश्वरः अत्र कल्पान्तरुद्रः (जगदिव) त्रिभुवनमिव असौ (अहर्पतिः) अर्कः दिनं संहरति क्षपयति (संक्षये) कल्पान्ते । किं कृत्वा । तवाक्ष्णौ कमलकान्तिं सञ्चार्येव अह्नः पतिरहर्पतिः । 'रोऽसुपि' (पा० सू० ८-२-६९) इति रेफः ॥३०॥

१. 'कमलकान्तिम्' - अपा -ल. न.

शीकरेत्यादि ॥ तव (पितुः) हिमवतः अमी निर्झराः प्रपाततोयानि इदानीं (इन्द्रचापपरिवेषशून्यतां) इन्द्रधनुषा यः परिवेषोऽभिव्याप्तिस्तेन शून्यतां विरहत्वं[१] (व्रजन्ति) यान्ति । कुतः । कुत्रः (विवस्वति) सूर्ये अवनते अवलम्बमाने (मरीचिभिः) मयूखैः (शीकरव्यतिकरं) जलकणसम्पर्कं (दूरयति) विश्लेषमाणे । जलविप्रट्सु हि रविरश्मिसम्बन्धात्सुरचापोत्पतिः[२] । दूरं करोति दूरयति । 'प्रतिपदिकाद् धात्वर्थे'[३] इति णिच् ॥३१॥

१. विरहम् -ल. २. सुरेशकार्मुकोत्पत्तिः -ल.
३. पा. सू. ३-१-२४ अन्तर्गतं वार्तिकम् ।

दष्टतामरसेत्यादि ॥ दम्पत्योः चक्रवाकयोः सरसि[१] अल्पम् अन्तरं व्यवधानम् अनल्पतां गतं दूरं सम्पन्नं संश्लेषं[२] कर्तुमशक्यत्वात् । यतः निघ्नयोः परवशयोः दैववशाद्धि तयोर्निशि वियोगः । अतश्च दुःखवशात् (दष्टतामरसकेसरत्यजोः) दष्टस्य खण्डितस्य जिधांसितस्य तामरसस्याब्जस्य[३] केसरं[४] त्यक्तवतोः क्रन्दतोः कूजतोः । तथा (विपरिवृत्तकण्ठयोः) विपरिवृत्तो विस्वरीभूतो[४] गलो ययोः । संयोगे हि तौ मधुरगलौ। 'विरहदीनकण्ठयोः' इति पाठान्तरम् । शत्रुघ्नादिवत् विघ्नशब्दः । 'चक्रवाकयोः' इति 'पुमां स्त्रिया' (पा. सू. १-२-३७) ॥३२॥

१. 'तडागे' - अपा -ल. न. २. संश्लेषस्य-ल.
३. 'पद्मस्य' - अपा -ल. ४. 'किञ्जल्कम्' - अपा -ल.
५. 'कण्ठः' - अपा -ल. न.

स्थानमाह्निकमित्यादि ॥ हे प्रिये, एते (दन्तिनः) करिणः आह्निकं दिवातनं स्थानम् (अपहाय) हित्वा वारि गृह्णते जलमध्यं श्रयन्ति । किमर्थम् । (आविभातचरणाय) आविभातं रात्रिपर्यन्तं यच्चरणं भोजनं तदर्थम् । निशि हि ते जलान्तर्विचरन्ति । कीदृशं स्थानम् । (शल्लकीविटपभङ्गवासितं) शल्लकीनां नलदानां विटभङ्गेन पल्लवखण्डेन वासितं सुरभितम् । ते हि शल्लकोभोजिनः । वारि कीदृशम् । (वारिरुहबद्धषट्पदं) वारिरुहेष्वब्जेषु सङ्कोचवशाद् बद्धाः[१] षट्पदा अलयो यत्र । अह्नि भवमाह्निकम् ॥३३॥

१. 'संयताः' - अपा -ल. न.

पश्य पश्चिमेत्यादि ॥ हे मितकथे स्वल्पभाषिणि (पश्य) विलोकय (पश्चिमदिगन्तलम्बिना विवस्वता) वारुणीस्थेनार्केण दीर्घया प्रतिमया आयतेन प्रतिबिम्बेन

(सरोम्भसां) सरसामम्भसां तापनीयम् इव सेतुबन्धनं निर्मितम् । सौवर्णमयसंक्रम' इव रचितः प्रतिमायाः पारावारव्याप्तेः ॥३४॥

१. सौवर्णसंक्रमः -ल.

उत्तरन्तीत्यादि ॥ (वनवराहयूथपाः) काननसूकरसङ्घपतयः (गाढपङ्कपल्वलं) घनकर्दमपल्वलं वेशन्तं[1] विनिकीर्य अपहाय[2] तापाभावात् उत्तरन्ति स्थलमुर्व्या निर्गच्छन्ति अतिवाहितातपाः[3] । उष्मभयादिव वराहमहिषादयो दिनं पङ्कमध्ये क्षपयन्ति । दंष्ट्रा विद्यन्ते येषां ते दंष्ट्रिणः । अतश्चोत्प्रेक्षते । (दष्टभङ्गुरविसाङ्कुराः) दंष्ट्रालग्ना भङ्गुराः कुटिला विसाङ्कुरा येषां ते तथाविधा इव । दंष्ट्राणां सृणालाङ्कुरवत् । अव्यभिचारेऽप्युत्प्रेक्षार्थं दंष्ट्रिण इति विशेषणम् ॥३५॥

१. 'अल्पसरः' - अपा -ल.  २. त्यक्त्वा -ल.
३. निर्गमितोष्माणः -ल. न.

एष वृक्षेत्यादि ॥ हे (पीवरोरु) संहितोरु[1] एष (बर्हिणः) मयूरः (वृक्षशिखरे कृतास्पदः) तरुप्रान्तासीनः दिनान्ते अर्कमीक्ष्यमाणः (हीयमानं) क्षीयमाणं (अहरत्ययातपं) दिनान्तातपं पिबति इव ग्रसत इव । अन्यथा क्व तर्हि स गत इति भावः । कीदृशम् । (जातरूपरसगौरमण्डलं) जातरूपरसवद् गौरमण्डलम् । कनकद्रववत्ताम्रपिङ्गलपरिणांहं[2] चक्रवालम्[3] । केचितु बर्हिविशेषणमेतदाहुः । मण्डलं च बर्हमेतदसम्बद्धं तस्य गौरत्वाभावत् ॥३६॥

१. 'स्थूलोरु' - अपा -ल.  २. 'कनक...णाहम्' -नास्ति -ल.
३. ताम्रचक्रवालम् -ल. न.

पूर्वभागेत्यादि ॥ खं व्योम किञ्चिद् शेषवत् अवसृष्टम् अवशेषं सरः इव भाति प्रतिभासते । (पूर्वभागतिमिरप्रवृत्तिभिः) ऐन्द्रयाऽन्धकाराविर्भावे एकतः व्यक्तपङ्कम्[1] इव जातमित्युप्रेक्षा । स एष विवस्वता (हृतातपजलं) संहृतमातपम् एव जलं यस्य । रविपीतजलस्य हि किञ्चिच्छिष्टस्य कर्दमाविर्भावो भवति । शेषं विद्यते यस्य तच्छेषवत्। इवशब्दो भिन्नक्रमः ॥३७॥

१. पटुकर्दमम् -ल.  २. 'सूर्येण' - अपा -ल.

आविशद्भिरित्यादि ॥ एते आश्रमाः (श्रियं) शोभां (बिभ्रति) वहन्ति । केन

उटजाङ्गणं वनमठिकाजिरम् (आविशद्भिः) अधितिष्ठद्भिः (मृगैः) हरिणैः (मूलसेकसरसैः) आलवालसेकहर्षितैः च वृक्षकैः (प्रविशदग्निधेनवः) प्रविशन्तीभिः अग्निधेनुभिर्होमगवीभिः। तथा उदीरिताग्नयः उदीरितैः संधुक्षितैश्च त्रेतानलैः । अग्निधेनुशब्दे चतुर्थ्यर्थं प्रदर्श्याश्व-घासवत्षष्ठीसमासः । एवमन्यत्र ।।३८।।

बद्धकोशमित्यादि ।। एतत् कुशेशयं राजीवं बद्धकोशम् अपि सङ्कुचिताभोगमपि सावशेषविवरं किञ्चद् रन्ध्रान्वितं क्षणं (तिष्ठति) आस्ते । अत्रोत्प्रेक्षते । वसतिमवस्थानं ग्रहीष्यते करिष्यते (षट्पदाय) भ्रमराय (प्रीतिपूर्वं) प्रीत्या अन्तरम् अवकाशं दातुम् इव। न सर्वमुकुलितं तत्र हि तेन प्रवेष्टव्यम् । अवशिष्यत इत्यवशेषम्, तच्च तद्विवरम्। सह तेन वर्तते इति सावशेषं सरन्ध्रमित्यर्थः ।।३९।।

दूरमग्रेत्यादि ।। वारुणी दिक् प्रतीची (अरुणेन) लोहितेन (भानुना) रविणा (भाति) विराजते । (बन्धुजीवकुसुमेन) बन्धुजीवकुसुमचित्रकेण (कन्यका) कुमारी इव दूरम् अत्यर्थं (मण्डिता) । अत एव अग्रपरिमेयरश्मिना परिमेया अल्पा रश्मयो[१] यस्येति भानुविशेषणम् । तिलकेनापि केसरवता सकिञ्जल्केन ।।४०।।

१. दीधितयः -ल. न.

सामभिरित्यादि ।। पते सहचराः वालखिल्याः सहस्त्रशः (भानुं) रविं सामभिः (स्तुवन्ति) नुवन्ति । रविरथेन सह गमनादेषां सहचरत्वम् । अतिबहुत्वाच्च तेषां सहस्त्रसंख्यत्वम् । कीदृशैस्सामभिः । (स्यन्दनाश्वहृदयंगमस्वनैः) स्यन्दनाश्वानां रथ्यानां हृदयंगमः प्रियस्वरो ध्वनिर्येषाम् । वजिनो हि प्रियगेयाः । सामानिव गीयन्ते । भानुं कीदृशम् । अग्निपरिकीर्णतेजसम् अग्नौ परिकीर्णं निक्षिप्तं तेजो येन । वनौषधीषु च तेजो निधाय रविरस्तमेतीति श्रुतिः । मुनयो हि तपःप्रभावत् क्षुत्तृषाभिर्न पीडयन्ते । तत्र किरणोष्मपायिनः उष्मवत्वात् ।।४१।।

सोऽयमानतेत्यादि ।। सः अयम् एवंविधो रविः हेयैः अस्तम् एति अस्ताद्रिं प्रविशति । कीदृशैः । अवरोहवशात् आनतशिरोधरैः भुग्नग्रीवैः अत एव (कर्णचामर-विघट्टितेक्षणैः) कर्णचामराभ्यां विघट्टितेक्षणैः आहतनैत्रैः । तथा (युग्भुग्नकेसरैः) युगेन मूर्द्धकाष्ठेन भुग्नकेसरैः सङ्कुचितसटैः । किं कृत्वेति । महोदधौ दिवसं दिनं सन्निधाय निक्षिप्य समुद्रे तस्य प्रवेशात् । यदुक्तम्-'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' इति । सोऽयमिति ध्वनिपदं गुणोत्कर्षप्रतिपादकम् ।।४२।।

खं प्रसुप्तमिवेत्यादि ।। (रवौ) सूर्ये संस्थिते नष्टे सति खं नभोऽपि प्रसुप्तम् इव निश्चेष्टं यथा । नाश्चर्यमथवा । यतः महतः तेजसः[1] ईदृशी गतिः एवंविधप्रकारः । यद्यदुरु तत् तेजः उद्‌गतं सत् यावत् यत्परिमाणं प्रकाशयति च्युतं नष्टमपि तत् । (तावतः) तावदेव मीलनाय[2] भवतीति[3] सत्पुरुषवृत्तान्तः सूचितः । तरणौ चोदिते निखिलमिव नभ उच्छ्‌वसित[4] मासीदस्तमिते तु[5] शयितमिव ।।४३।।

१. 'बृहतो धाम्नः' - अपा. ल.  २. 'संकोचाय' - अपा -ल.
३. प्रभवति -ल.  ४. 'विकसितम्' - अपा -ल.
५. 'सुप्तम्' - अपा -ल.

सन्ध्ययाप्यनुगतमित्यादि ।। न केवलमर्कोऽपगतो यावत् सन्ध्यया[1] अपि रवेः वपुः अनुगतम् । तेनैव सहास्तमितेत्यर्थः । युक्तं चैतत । येन (उदये) रविणोदयकाले या सन्ध्यां पूर्वं (पुरस्कृता) अग्रतो विहिता सा तम् आपदि अपि कथम् इव न अनुयास्यति । प्रभाते हि आदौ सन्ध्या पश्चात् तु सूर्योदयः । वन्द्यं वन्दनीयम् । (अस्तशिखरे) अस्तद्रिशिरसि समर्पितम् अस्तंगतमिति वपुर्विशेषणम् ।।४४।।

१. 'संध्यावेलया' - अपा -ल. न.

रक्तपीतेत्यादि ।। हे (कुटिलकेशि) अरालमूर्धजे अमूः एताः पयोमुचां कोटयः अभ्रलेखा भान्ति राजन्ते । कीदृश्यः । रक्तपीतकपिशाः) काश्चिद् रक्ताः हरिद्राः काश्चित् कपिशाः पिङ्गाः । उत्प्रेक्षते । त्वद्दर्शनार्थं[1] वर्तिकाभिः खटियाभिः इव (साधु) सम्यग् (वर्तिताः) वर्णीकृताः । ईश्वरस्य ह्यनेकवर्णयुक्तं वस्तुदर्शनयोग्यम् । अहोरात्रयोः सन्धिः संश्लेषः, तस्य वेला सन्धिवेला संध्योच्यते[2] ।।४५।।

१. 'भवत्यालोकनार्थम्' -अपा -ल.  २. 'संधिसंश्लेषरन्ध्रयोः' -अपा -ल. न.

सिंहकेसरेत्यादि ।। प्रिये पश्य एतत् । भूभृता अद्रिणा सान्ध्यम् आतपं तेजोऽमीषु (आत्मनः) आत्मीयेषु संविभक्तम् इव । केषु । (सिंहकेसरसटासुः सिंहानां केसरसटासु मूर्धजरोमवल्लीषु । केसराणां सटा इति षष्ठीसमासः । केचिदूर्ध्वरोमाणि केसराण्याहुर्लम्बमानानि तु सटाः । एवं च-'सटाच्छटाभिन्नघनेन बिभ्रतः' (शिशु० १-४७) इत्यादि । अवाचकं स्यादित्येतत् । तथा पल्लवप्रसविषु (द्रुमेषु) वृक्षेषु किशलयानां लौहितत्वात् । (धातुशिखरेषु) गैरिकादिधातुमत्सु[1] शृङ्‌गेषु । आतपस्य दृशि क्रियापेक्षं कर्मत्वम् ।।४६।।

१. ०मयेषु -ल. न.

पार्ष्णिमुक्तेत्यादि ।। एते (तपस्विनः) भुनयः प्रसिद्धाः[१] (अभिसान्ध्यं) सन्ध्याभिमुखं गूढम् उपांशु ब्रह्म वेदं (गृणन्ति) जपन्ति । शुद्धये पवित्रीकरणाय । कीदृशाः । विधिविदः विधानज्ञाः । तथा हि (पार्ष्णिमुक्तवसुधाः) पादाग्रस्थितत्वात् पार्ष्णिभ्यां[२] मुक्ता वसुधा[३] यैः । तथा (पावनाम्बुसरसाञ्जलिक्रियाः) पावनाम्बुना मन्त्रपूतेन तोयेन सरसश्चार्न्द्रोऽञ्जलिबन्धो[४] येषाम् ।।४७।।

१. श्रद्दधानः -ल. २. 'चरणपश्चिमभागाभ्याम्' - अपा -ल.
३. 'उत्सृष्टा उर्वी' - अपा -ल. ४. 'प्रसृतिरचना' - अपा -ल. न.

तन्नमुहूर्तमित्यादि ।। यतः मुनयः सन्ध्यां वन्दन्ते तत् माम् अपि त्वं (प्रस्तुताय) प्रकृताय नियमाय सन्ध्यावन्दनाख्याय (अनुमन्तुम्) अनुज्ञां दातुम्[१] अर्हसि । न चैकाकिनी भवती भविष्यति । यतः (विनोदनिपुणः) विनोदचतुरः (सखीजनः) वयस्यालोकः (वल्गुवादिनि) मधु(रभा)षिणि विनोदयिष्यति ।।४८।।

१. अनुज्ञातुम् -ल.

निर्विभुज्येत्यादि ।। ततः सन्ध्याप्रणामालापमाकर्ण्य सेर्ष्यत्वात् (दशनच्छदम्) अधरं निर्विभुज्य दष्ट्वा[१] (शैलराजतनया) पार्वती (समीपगां) निकटस्थां (विजयां) विजयाख्यां प्रतीहारीम् अहेतुकं निर्निमित्तमेव (आललाप) किञ्चिदूचे । यतो भर्तुर्वाचि[२] (अवधीरणापरा) अवहेलापरा[३] । सपत्न्या इव सन्ध्याया वन्दनं हि तस्या उद्वेगकरमतः पत्युरवलेपं कुर्वती कथान्तरं प्राप्तेत्यर्थः[४] ।।४९।।

१. 'कुटिलं कृत्वा' - अपा -ल. २. ०वाक्ये -ल. न.
३. 'अननुज्ञानिष्ठा' - अपा -ल. न.
४. प्रस्तावयतीत्यर्थः, प्राप्नोदित्यर्थः (इति) पाठान्तरम् -ल. न.

ईश्वरोऽपीत्यादि ।। (ईश्वरः) भगवान् अपि (दिवसात्ययोचितं) सर्वथाऽनुष्ठेयत्वात् सन्ध्योपासनं (मन्त्रपूर्वं) समन्त्रम् (अनुतस्थिवान्) अनुष्ठितवान्। स तु (प्रत्युपेत्य) प्रतीपमागत्य (सस्मितं) सहासं (पार्वतीं) प्रियाम् (आह) अब्रवीत् । असूयया ईर्ष्यया अवचनां तूष्णीभूताम् । अत एव सहसः । 'पार्वतीमनुनयन्नसूयिताम्' इति पाठान्तरम् ।।५०।।

मुञ्च कोपमित्यादि ।। हे (अनिमित्तकोपने) निर्निमित्तरोषणे सन्ध्याप्रणतिनिमित्तं कोपं (मुञ्च) त्यज । यस्मात् सन्ध्यया अहम् अन्यथा अन्येन वक्ष्यमाणप्रकारेण प्रणमितः (अस्मि) वन्दनं कारितः । न तु रागेण । मां च (किं) कस्मात् आत्मनः चक्रवाकसमवृत्तिं सहधर्मचारिणं पतिं न (वेत्सि) न बुध्यसे । प्रभुरपि रथाङ्गनामवत्तवायं चाटुकारीत्यर्थः। भगवान्नमति सन्ध्या गौरवान्नमयतीति प्रयोज्यप्रयोजकविवक्षया प्रणमित इति णिजुत्पत्तिः ।।५१।।

निर्मितेष्वित्यादि ।। हे सुतनु कृशाङ्गि पूर्वं स्वयंभुवा वेधसा पितृषु देवविशेषेषु निर्मितेषु या तनुः (उज्झिता) उत्सृष्टा सा रवेः अस्तम् उदयं च सेवते । सा सन्ध्या सम्पन्नेत्यर्थः । हे मानिनि तेन मम अत्र गौरवम् आदरः । एवं ह्यागमः । ब्रह्मा सत्त्वबहुलो मुखाद् देवान्निर्माय वपुरत्याक्षीत् । तद्दिनं समपद्यत । पुनरसौ प्रचुरतमो जघनादसुरान् सृष्ट्वा तनुममुञ्चत् । सा निशाऽभवत् । पुनरपि रजोमात्ररूपो मनसा मानवान्निर्माय देहमुत्ससर्ज । सा ज्योत्स्नाऽभवत् । भूयः सत्त्वमात्रकोऽहोरात्रान्तराले च राक्षसान् पितृनुत्पाद्य मूर्तिममुञ्चत् । सा सन्ध्या जातेति । ब्रह्मतनुरेषा गौरवेण नमस्क्रियते न तु सन्ध्या काचिदङ्गनेति ।।५२।।

तामिमामित्यादि ।। तदेतदास्ताम् । प्रकृतमनुसरामः । ताम् इमां सन्ध्याम् एवं सम्प्रति विलोक्य । कीदृशीम् । (तिमिरवृद्धिपीडितां) तमोवृद्ध्या पीडितामाक्रान्तम् । अतश्च भूमिलग्नम् इव स्थिताम् । उर्वीपर्यन्ते लगित्वा चासीनाम् । अप एव धातुरसनिम्नगाम् इव गैरिकरसनदीतुल्याम् । कीदृशीं नदीम् । एकतः एकस्मिन् पारे तटतमालमालिनीं तटे तमालमालान् बिभर्ति या ताम् तमस्तमालनिभत्वात् । 'तटनिषक्तशेवलाम्' इति पाठान्तरम् ।।५३।।

सान्ध्यमस्तमित्यादि ।। अपरा पश्चिमा दिक् अस्तमितशेषं[1] (रक्तरेखं) लोहितराजि (सान्ध्यं) सन्ध्याभवम् आतपं बिभर्ति वहति । (इव) यथा संपरायवसुधा सङ्ग्रामभूमिः सशोणितम् असृगनुलिप्तं तिर्यग् (उज्झितं) पतितं[2] मण्डलाग्रम् असिं[3] धारयति ।।५४।।

१. 'निमीलितावशेषम्' - अपा -ल. न.
२. पातितम् -ल. न.  ३. 'तरवारिम्' - अपा -ल.

यामिनीत्यादि ।। हे (दीर्घनयने) विशालाक्षि (यामिनीदिवससन्धिसम्भवे) सान्ध्ये (तेजसि) आतये (सुमेरुणा व्यवहिते) मेरुपर्वतान्तरिते सति एतत् अन्धतमसं[1] घनान्धकारं

(निरङ्कुशं) उच्छृंखलमाशु (विजृम्भते) प्रसरति । मेरु[२]व्यवधानमेवास्तमय इति ज्योतिर्विदः[३] । अन्धयतित्यन्धम्, अन्धं च तमश्च अन्धतमसम् ॥५५॥

१. 'अन्धतिमिरम्' - अपा -ल. न.     २. नग० -ल.

३. 'यामिनीदिवससंधिसंभवे तेजसि रजनीदिनसंधिसंध्यावेलोद्भवे महसि' - अपा -ल. न.

नोर्ध्वमीक्षणेत्यादि ॥ (तिमिरोल्बवेष्टितः) तिमिरमेवोल्बं जरायुस्तेनावृतो यः (निशि) निशीथिन्यां लोकः गर्भवासः मातुर्जठरे इव (वर्तते) तिष्ठति । तथाहि । (नोर्ध्वमीक्षणगतिः) नोर्ध्वमीक्षणयोर्गतिः प्रसरो यस्य । न अपि अधः बुध्ये[१] न अभितः पार्श्वद्वयेन पुरतः अग्र्यः । न अपि पृष्ठतः पश्चात् । योऽपि गर्भे तिष्ठति तस्य सर्वतो दृष्टिरोधो भवतीति ॥५६॥

१. बुद्धयेत -ल.

शुद्धमाविलमित्यादि ॥ सम्प्रति संहतेन (तमसा) ध्वान्तेन (शुद्धम् आविलं) निर्मलानिर्मलं च ( अवस्थितं चलं) स्थिरचटुलं च (वक्रम् आर्जवगुणान्वितं) स्पष्टकुटिलं च इत्यादि सर्वम् एव समीकृतम्[१] । न हि तमसि एदार्थानां भेदग्रहणव्यक्तिः[२] । अतश्च असतां दुर्जनानां महत्त्वं प्रभावं धिक्[३] निन्दामः । यतः हतान्तरं नष्टविशेषम् । न ह्यसतां महत्त्वे गुण्यागुण्ययोर्विशेषो भवति ॥५७॥

१. 'समानं कृतम्' - अपा. ल.     २. ग्रहणभेदशक्ति -ल.

३. 'निन्दनीयम्' - अपा. -ल. न.

नूनमुन्नमतीत्यादि ॥ हे (पुण्डरीकमुखि) पद्मवदने (नूनं) निश्चितं (शार्वरस्य) नैशिकस्य (तमसः) ध्वान्त (निषिद्धये) उन्मूलनार्थं यज्वनां पतिः द्विजनाथश्चन्द्रः उन्मति उदेति । कथं ज्ञायत एतदित्याह । (पूर्वदिङ्मुखं) पूर्वाशावदनमेतत् । (कैतकैः रजोभिः) केतकीकुसुमरजःपरागैः इव आहतं छुरितम् इव लक्ष्यते । शुक्लीभूतमित्यर्थः । तमसि च सितता शशाङ्कोदयादेव जायते । यजन्त इति यज्वानो द्विजाः । शर्वर्या दृश्यते शार्वरं 'शेषे' (पा० सू० ४-२-९२) इत्यण् । केतक्या विकारः पुष्पं कैतकम् । पुष्पमूलेषु बहुलमिति विकरणे लुक् । तद्धितलुकि केतकस्येदं कैतकम् । तस्येदमित्यण् । आदिवृद्धिः ॥५८॥

मन्दरान्तरितेत्यादि । सतारका नक्षत्रान्विता (निशा) शर्वरी (मन्दरान्तरितमूर्तिना)

मन्दराद्रिव्यवहितवपुषा (शशभृता) शशिना लक्ष्यते दृश्यत इव यथा (प्रियसखीसमागता) प्रियाभिः सखीभिः समागता त्वं मया रहसि (वचनानि) वचांसि (श्रोष्यता) आकर्णयितुं पृष्ठतः पश्चद्भागाल्लक्ष्यसे ।।५९।।

रुद्धनिर्गमनमित्यादि ।। (रात्रिनोदिता) निशाप्रेरिता दिगैन्द्री (चन्द्रमण्डलं) शशिबिम्बम् एतत् उद्गिरति उद्वमति । रहस्यम् इव इत्युपमा । तदपि सखीचोदनयोच्यते[1]। कीदृग् रहस्यम् । (आदिनक्षयात्) आदिवसान्तं रुद्धनिर्गमनं रक्षितप्रसरम् । रहस्यं दि दिने न कस्यचिदुदीर्यते (पूर्वदृष्टतनुचन्द्रिकास्मितं) पूर्वं दृष्टा तन्वी चन्द्रिकेव स्मितं यस्य । हासपूर्वं हि रहस्योद्गिरणम् ।।६०।।

१. 'नोच्यते इति पाठान्तरम्' - अपा -ल. न.

पश्य पक्वेत्यादि ।। पार्वति पश्य एतत् वियुक्तं (चक्रवाकमिथुनं) रथाङ्गनामयुगं (हिमांशुना) इन्दुना विडम्ब्यते अनुक्रियते । यतः (पक्वफलिनीफलत्विषा) परिणतप्रियङ्गुफलपीतेन नवोदितत्वात् । तथा (बिम्बलाञ्छितवियत्सरोम्भसा) बिम्बेन मण्डलेन लाञ्छितेऽङ्किते वियत्सरोऽम्भसी येन, नभसि ह्यसौ स्वयमेव स्थितः । सरसि तु प्रतिबिम्बतः । अतश्च व्यवहितचक्रवाक (युगल) सारूप्यम् । केचित् तु भ्रान्त्युत्पादाद् विडम्ब्यते विचार्यत इति किलाहुः । एवं च वियद्ग्रहणमकिञ्चत्करं स्यात् ।।६१।।

शक्यमोषधिपतेरित्यादि ।। (ओषधिपतेः) इन्दोः (कराः) विरणाः तव कर्णपूररचनाकृते श्रोत्रावतंसकरचनार्थम् (अग्रनखसंपुटैः) कररुहकुड्मलाग्रैः छेत्तुं शक्यं शक्यन्ते । यतः नवोदयाः अचिरोदिताः । अत एव (अप्रगल्भयवसूचिकोमलाः) अजरठयवाङ्कुरसुकुमाराः । कोमलत्वाच्च छेदशक्तिसम्भावना । यवाङ्कुराश्च मङ्गलत्वात्प्रायेण कर्णे क्रियन्ते । शक्यं कराच्छेतुमिति पूर्वं सामान्योपक्रमः पश्चाद्विशेषाभिधानमिति भिन्नलिङ्गवचनत्वेऽपि सामानाधिकरण्यं न विरुध्यते । 'कूपशताद्वापि' इत्यादि ।।६२।।

अङ्गुलीभिरित्यादि ।। (अङ्गुलिभिः इव) अङ्गुलिनिभैः (मरीचिभिः) मयूखैः (केशसंचयं) केशकलापकल्पं (तिमिरं) तमः सन्निगृह्य आकृष्य (रजनीमुखं) यामिनीवधूयक्त्रं (शशी) चन्द्रः[1] चुम्बति इव पिबतीव, इत्यतिसन्निकर्षाच्चुम्बनारोपः । (कुङ्मलीकृतसरोजलोचनं)[2] मुकुलितानि कमलान्येव लोचनानि यत्र मुकुलीकृत-नलिननेत्रम्। मुखपाने हि कामिन्यश्चक्षुषी सङ्कोचयन्तीति स्वभावोक्तिः ।।६३।।

१. यामिनीनाथः -ल. २. 'कुड्मलीकृतानि' - अपा -ल.

पश्य पार्वतीत्यादि ।। (पार्वति) प्रिये (पश्य) विलोकय । (नवोन्दुरश्मिभिः) शशिकरैः (भिन्नसान्द्रतिमिरम्) ईषदुन्मूलितान्धकारं (नभस्तलं) खं (मानसं सरः) मानसाख्यसरः (इव) सदृशं (लक्ष्यते) दृश्यते । कीदृक् सरः । (द्विरदभोगदूषितं) पूर्वं द्विरदाभोगैः सुरकरिकायैर्दूषितमाविलीकृतमनन्तरं संप्रसीदत् वैमल्यमाप्नुवत् । मानसस्यातिविपुलत्वात् एतदुपमानम् ।।६४।।

रक्तभावमित्यादि ।। एष (चन्द्रमाः) शशी (रक्तभावं) लौहित्यम् (अपहाय) त्यक्त्वा (परिशुद्धमण्डलः) निर्मलबिम्बः (जातः) सम्पन्नः । यस्मात् (निर्मलप्रकृतिषु) शुद्धस्वभावेषु (कालदोषज्ञा) कालदोषवशादुत्पन्ना (विक्रिया) विकृतिः न (स्थिरोदया) बहुकालभाविनी । शशी च प्रकृत्या निर्मलः ।।६५।।

उन्नतेष्वित्यादि ।। एष शशिनः प्रभा ज्योत्स्ना (उन्नतेषु) उच्चभागेषु (स्थिता) अवस्थिता । (निशातमः) तिमिरं तु निम्नसंश्रयपरं कूपाद्यधोभागस्थमभवत् । (हि) अतश्च जानीमहे । (वेधसा) प्रजापतिना (नूनं) निश्चितं गुणदोषयोः गतिः स्थितिः (आत्मसदृशी) आत्मानुरूपा (प्रकल्पिता) कृता । गुणानामुन्नतेषु सज्जनवदवस्थानं दोषाणां तु दुर्जनवन्नीचेषु ।।६६।।

चन्द्रपादेत्यादि ।। अत्र गिरौ (मेखलातरुषु) नितम्बवृक्षेषु निद्रितान् सुप्तान् (शिखण्डिनः) मयूरान् (असमये) अकाण्डे एवैते चन्द्रकान्तमणिजलबिन्दवः[१] (बोधयति) उन्निद्रयति । यतस्ते चन्द्रपादजनितप्रवृत्तयः शशिकरसंस्पर्शादुत्पन्नस्रुतयः । अतश्च जलधरजलकणभ्रान्त्या बर्हिणामुल्लासः ।।६७।।

१. 'सोमकान्ततोयविप्रुषः' - अपा -ल.

कल्पवृक्षेत्यादि ।। हे (अविकल्पसुन्दरि) निःसंशयरम्ये (कल्पवृक्षशिखरेषु) कल्पपादपशिरस्तलेषु सितैः (अंशुभिः) करैः नूनमयं (शशी) इन्दुः (हारयष्टिगणनां) मुक्ताहारलतासंख्यानं (कर्तुं) विधातुम् (आगतकुतूहलः) उत्पन्नकौतुकः । सर्वेष्वेव मुक्ताप्रालम्बेषु कराणां स्फुरितत्वाद् गणनां चकार । संस्पर्शेण[१] क्रियत इत्येवं सम्भावना ।।६८।।

१. गणना च करस्पर्शेण -ल. न.

उन्नतावनतेत्यादि ।। सतिमिरा चन्द्रिका इयं गिरेः (भाति) शोभते (भूतिः) भस्म इव (मत्तहस्तिनः) करीन्द्रस्य । कुतः । ज्योत्स्नायास्तमोमिश्रत्वमाह । (उन्नतावनतभागवत्तया) उन्नताऽवनतभागवत्त्वेन उच्चेषु भागेषु ज्योत्स्ना, निम्नेषु तमः । कीदृशी भूतिः । भक्तिभिः विच्छित्तिभिः (बहुविधार्पिताः नानाप्रकारं रचिता । अतश्च क्वचित् स्वाभाविककार्ष्ण्यमवलक्ष्यते ।।६९।।

एतदुच्छ्वसितेत्यादि ।। एतत् कुमुदं कैरवम् आ निबन्धनात् आवृन्तं कार्त्स्न्येन अञ्जसा आशु भिद्यते विकसति । उत्प्रेक्षते । ऐन्दवं प्रभारसं कान्तिजलम् (ऊच्छ्वसितपीतम्) उच्छ्वस्योच्छ्वस्य पीतत्वाद् वोढुम् अक्षमम् इव अशक्तमिव । यः किलातितृप्तोऽतितरां पिवति, असौ वोढुमक्षमो विसृचिकया भिद्यते स्फुटति । यच्च (कुमुदं) भिद्यते तत्पुरतः मुक्तषट्पदविरावं (भवति) । विकसति हि कुमुदे रजोलम्पटा भ्रमरा विरुवन्ति । उच्छ्वसितेन विकसितेन सोच्छ्वासेन पीतमुच्छ्वसितमिति तृतीयासमासोऽत्र । प्रभेव रसः प्रभारस इति मयूरव्यंसकादित्वात्समासः । भिद्यत इति कर्मकर्तरि । कुमुदमिति जातावेकवचनम् ।।७०।।

पश्य कल्पेत्यादि ।। हे चण्डि[१] भामिनि (पश्य) विलोकयैतत् । (कल्पतरुलम्बि) कल्पवृक्षे लम्बमानम् (अंशुकं) चीरं (मारुते) वाते (चलति) वहति (विपरिवृत्तं) विपरिवृत्तत्वात् केवलं व्यज्यते स्फुटीभवति न तु स्वसक्तया । यतो (शुद्धया) निर्मलया (ज्योत्स्नया) चन्द्रिकया (जनितरूपसंशयं) कृतसत्तासन्देहं द्वयोरपि सितत्वात् । वातचालनात्तु निश्चयः । चण्डीशब्दे बह्वादित्वाङीष्[२] । व्यज्यत इति कर्मकर्तरि ।।७१।।

१. 'प्रणयकुपिता नारी चण्डीत्यभिधीयते' - अपा -ल.

२. द्र. पा. सू. ४-१-४५

शक्यमङ्गुलिभिरित्यादि ।। (शाखिनाम्) अधः तरुविवरप्रविष्टाः (पत्रजर्जरशशिप्रभालवैः) पत्रैः जर्जराः खण्डा ये शशिप्रभालवाः ज्योत्स्नाबिन्दवस्ते अङ्गुलिभिः उद्धृतैः गृहीतैः तव (अलकान्) अलकाः कचाः (उत्कचयितुम्) अलङ्कर्तुं (शक्याम्) शक्याः । वृक्षाणामधः पतितानि यानि पुष्पाणि तद्वत् पेशलमनोज्ञैः । कोमलैरिति पाठे कोमलं सुकुमारं सदृशं च अतश्च तरुतलपतितैः पुष्पैर्यद्वदलकपाशो मण्ड्यते तद्वदेभिस्तव तत्सदृशैश्चन्द्रिकयैरपीति वाक्यर्थः । उत्कचनमलङ्करणमूर्ध्वबन्ध इति केचित् ।।७२।।

एष तारमुखीत्यादि ।। हे (तारमुखि) विमलवदने एष शशी (तरलबिम्बया) चटुलदेहया योग्यतारया प्रयुज्यते सम्बध्यते । यथा (साध्वसात्) भयात् (उपगतप्रकम्पया) वेपथुमत्या (नवदीक्षया कन्यया) नवोढया वरः (योगतारया) तया । दीक्षाऽत्र विवाहः ।।७३।।

पाकभिन्नेत्यादि ।। हे चन्द्रबिम्बनिहिताक्षि शशिमण्डलक्षिप्तनयने तवैषा चन्द्रिका (गण्डलेखयोः) कपोलयोः रोहति इव जायत इव । कीदृशयोः । (पाकभिन्नशर-काण्डगौरयोः) पाकेन भिन्ना विशेषिताः शरकाण्डाः शरतृणस्तम्बद्वद् गौरयोः। (उल्लसत्प्रतिकृतिप्रसादयोः) अत एवोल्लसन्ती स्फुरन्ती याऽसौ प्रतिकृतिश्चन्द्रिकाबम्बं तया प्रसन्नयोः सतेजसोः । प्रतिकृतिरिति पृथक्वाक्ये तु चन्द्रिकाविशेषणम् ।।७४।।

लोहितार्केत्यादि ।। इयं (गन्धमादनवनाधिदेवता) गन्धमादनाद्रिवनदेवता (कल्पवृक्षमधु) कल्पतरूणां[1] मधु मद्यं स्वयं (बिभ्रति) आदाय त्वां (समागता) समुपागता प्राप्ता । यतः स्थितिमती साचारा । कीदृक् मधु । (लोहितार्कमणिभाजनार्पितं) लोहितो रक्तोऽर्कमणिः पद्मरागस्तन्निर्मिते भाजने पात्रेऽर्पितं न्यस्तम् ।।७५।।

१. कल्पवृक्षजम् -ल.

आर्द्रकेसरेत्यादि ।। हे विलासिनि त्वदीये अत्र (सुखं) मुखे (लब्धवसतिः) प्राप्तावस्थानः मदः किम् इव गुणान्तरं (करिष्यति) विधास्यति । यतस्तद् आद्रकेसरसुगन्धि सरसवकुलकुसुमवत्सुरभि (स्वभावतः) प्रकृत्या च (रक्तमत्तनयनं) लोहिते मत्तमत्ते क्षीबे इवि[1] चदुलत्वान्नयने यत्र । मदेन हि सौरमे नेत्रे (सति) चटुलविलासा विज्ञेयाः ।।७६।।

१. 'क्षीबे इव' - नास्ति -ल. न.

मान्यभक्तिरित्यादि ।। अथवा (सखीजनः) वयस्यालोकः मान्यभक्तिः अनुष्ठेयः सेव्यः । यदि च त्वं प्रत्याचक्षे तदपमानितैषा स्यादतः (सेव्यतां) पीयतामिदं मधुगुणान्तरम् (अनङ्गदीपनं) मदनसंधुक्षणम् इति उदारं महार्घं (अभिधाय) उक्त्वाऽसौ (तां) प्रियां (पानम्) आसवं अपाययत । अपीप्यदिति पिबतेः प्रत्यवसानार्थत्वात् द्विकर्मकता ।।७७।।

पार्वती तदुपभोगेत्यादि ।। ततः (पार्वती) गौरी तदुपभोगसम्भवां मधुपानोत्थां विक्रियां क्षीबताख्यं विकारं ययौ प्राप । असावपि विक्रीयाऽपि मनोहरा[1] । अपि विस्मयगर्भे विरोधे वा । विकारः किल न तथा रम्यः स्यात्[2] । का यथा कां विक्रियां

रम्यां यातीत्याह । आम्रता इव सहकारताम् इति । आम्रो हि प्रकृतिः सहकारता विकृतिरपि प्रकृतेरुत्कृष्टा सुस्वादु सुगन्धित्वात् । आम्रता कथं सहकारतां यातीत्याह । (अप्रतर्क्यविधियोगनिर्मितां) अप्रतर्क्यो दुर्ज्ञेयो यो विधियोगो दैवव्यापारस्तेन विनिर्मितां कृताम् । आम्रता हि केनचिद् दैवभावात्[३] सहकारतां सम्पद्यते वयं न विद्मः[४] । कस्मिन् देशे कविना आम्रसहकारयोः प्रकृतिविकारभावो दृष्टोऽस्माभिर्हि सामान्यविशेषभावस्तयोरुपलब्धः ।

तथा चोक्तम् -

> अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते ।
> पुष्पैः फलैस्तु संयुक्तः सहकार उदाहृतः ॥७८॥

१. 'शोभना' - अपा -ल. २. भवति -ल.
३. वशात् -ल. ४. जानीमः -ल.

तत्क्षणमित्यादि ॥ सा (सुवदना) कान्तमुखी द्वयोः उभयोः (वशवर्तिनी) आयत्तो (बभूव) आसीत् । कीदृशयोः । विपरिवर्तितह्रियोः अपास्तत्रपयोः । निशि द्वयमापि निर्लज्जयति । रिरंसार्थं च (शयनं) शयनतलं नेष्यतोः (इद्धरागयोः) इद्धो दीप्तो रागोऽनुरागो ययोः ॥७९॥

घूर्णमानेत्यादि ॥ एवंविधम् (उमामुखं) गौरीवक्त्रम् (ईश्वरः) भगवान् (आननेन) मुखेन न तावत् पपौ अपि चक्षुषा एव दृश्यमानेनैव तेन सुखोत्पादनात् । तावच्छब्दोऽनन्तरं मुखपानमपि सूचयति । तथा धूर्णमाननयनं चञ्चलनेत्रं स्खलद्वचः अन्तराविच्छिन्नवचनं स्वेदबिन्दुमद् घर्मकणाचितम् । अकारणस्मितं निर्निमित्तहासम् । चुम्बनं दर्शनं च पानम्[१] ॥८०॥

१. 'अत्र पाठान्तरम् । चुम्बनं पानदर्शनम्' । अपा -ल. न.

तां विलम्बीत्यादि ॥ ततः (ईश्वरः) शंभुः गौरीम् (उद्वहन्) आदाय रहः एकान्ते मणिशिलागृहं प्राविशत् । कीदृशीं । मदवशात् (विलम्बितपनीयमेखलां) विलम्बिनी[१] मेखला कनकरशना यस्याः । तथा (जघनमारदुर्वहां) जघनभारेण[२] दुर्वहां गुर्वीम् । कीदृशो हरः[३] । (ध्यानसंभृतविभूतिः) ध्यानेनेच्छामात्रेण सम्भृतविभूतिराकृष्ट-तल्पाद्युपकरणः ॥८१॥

१. 'लम्बमाना तपनीय०' - अपा -ल.

२. 'श्रोणीभारेण' - अपा -ल. ३. भगवान् -ल.

तत्र हंसेत्यादि ।। तत्र वासवेश्मनि असौ (प्रियासखः) प्रियया सह[1] शयनम् अध्यशेत पर्यङ्कमधितस्थौ । शारदाभ्रम्[2] इव रोहिणीपतिः रोहिण्या साकमिन्दुः । कीदृशम्। (हंसधवलोत्तरच्छदं) हंसवद् धवलं उत्तरच्छदः प्रच्छादनपटो[3] यस्य । तथा (जाह्नवीपुलिनचारुदर्शनं) गङ्गासैकतवन्नेत्रसुखकारि सितत्वाद् विशालत्वाच्च ।।८२।।

१. भार्यासहायः - अपा -ल. २. सिताभ्रम् - अपा -ल.

३. प्रच्छदपटः -ल.

क्लिष्टकेशमित्यादि ।। तस्य ईश्वरस्य (पार्वतीरतम्) उमानिधुवनं तृप्तये न अभूत् । अभिलाषमवर्धयत् । कीदृशम् । (क्लिष्टकेशं) कदर्थितकेशपाशम्[1] । अवलुप्तचन्दनम् उत्पुंसिताङ्गरागं (व्यत्ययार्पितनखम्) अस्थानदत्तकररुहं मांसलोष्वपि स्थानेषु दत्तनखम्[2] । समत्सरम् ईर्ष्यायुतम् च्छिदुरमेखलागुणं त्रुटितमेखलादाम । रतस्य परां कोटिमधिरूढत्वात् । स्वयं च्छिद्यत इति च्छिदुरम् ।।८३।।

१. ०शिरोरुहं क्लिष्टकेशपाशम् -म. २. तद्दानात् -ल.

केवलं प्रियतमेत्यादि ।। तेन पार्वतीरततृप्तिर्नाधिगता केवलं (ज्योतिषां पङ्क्तिषु) ताराश्रेणिषु (अवनतासु) लम्बमानासु प्रभातकाले (प्रियतमादयालुना) प्रियायाः कृपालुत्वात् (नेत्रमीलनकुतूहलं) नेत्रमीलने स्वापे कौतुकं (कृतम्) अकारि । कथं सुप्यत इति । न हि भगवतस्तत्त्वतो निद्रामोहाविर्भावः । तथा (तत्परिगृहीतवक्षसा) कान्तया परिगृहीतमाश्लिष्टं वक्षो यस्य । देवीमालिङ्ग्य मनागस्वपदित्यर्थः ।।८४।।

स व्यबुद्ध्यतेत्यादि ।। ततः स असौ उषसि प्रभाते व्यबुद्ध्यत निद्रामत्याक्षीत्। शातकुम्भकमलाकरैः समम् । मानसकनककमलखण्डानि यदा विकसितानि तदाऽसावुन्निदद्रे इत्यर्थः । कीदृशः । बुधस्तवोचितः बुधानां ब्रह्मविष्णुशक्रप्रभृतीनां स्तवोचितः स्तुत्यः । तथा गेयज्ञैः (किन्नरैः) किंपुरुषैः गीतमङ्गलः उच्चारितस्तवः । किम्भूतैः । (मूर्च्छनापरिगृहीतकैशिकैः) मूर्च्छनया स्वरसञ्चारणया परिगृहीता आश्रिता कैशिकी नाम जातिर्यैः । सा हि देवस्तुतियोग्या ।।८५।।

तौ क्षणमित्यादि ।। (विशिथिलोपगूहनौ) विमुक्तालिङ्गनौ तौ (दम्पती) जायापती (गन्धमादनवनान्तमारुताः) गन्धमादनवनोद्देशवायवः सुरतखेदापनुदे सिषेविरे । कीदृशाः।

चलितमानसोर्मयः इति सेव्योक्तिः । सुरभित्वात् । पद्मभेदपिशुनाः कमलविकाससूचकाः[1] ॥८६॥

१. 'इति सौगन्धोक्तिः' - अपा. -ल.

ऊरुमूलमित्यादि ॥ ततः (प्रशिथिलस्य) श्लथस्य (वाससः) अंशुकस्य (संयमं) ग्रथनं (कुर्वतीं) विदधतीं (प्रियतमां) कान्तां हरः ईश्वरः अवारयत् न्यषेधीत् । यतः तत्क्षणं ऊरुमूलनखमार्गराजिभिः श्रोणीतटकररुहपदलेखाभिः ह्रतविलोचनः लोभितनयनः। अतश्च भूयो रिरंसया प्रियावासःसंयमननिवारणम् ॥८७॥

स प्रजागरेत्यादि ॥ स देवः प्रियामुखं दयितावदनं (प्रेक्ष्य) दृष्ट्वा । कीदृशम्। प्रजागरकषायलोचनम् अप्रसुप्त[1]मधुरनयनम् । तथा गाढदन्तपदपीडिताधरं तीक्ष्णरदनपरिपीडितोष्ठम्[2] आकुलालकं धूतललाटकेशं अपास्तचित्रकं निवृत्तविशेषकं भिन्नतिलकं नष्टतमालपत्रं यत्र तथाविधं प्रियामुखं वीक्ष्य ॥८८॥

१. उपरक्त० -ल. २. दष्टाधरम् - अपा. -ल.
३. क्रियापदरहितत्वात् अस्य श्लोकस्य पञ्जिका अपूर्णा प्रतिभाति ।

तेन भङ्गीत्यादि ॥ अतश्च (निशात्यये) क्षणदान्ते (निर्मले) सुप्रकटे अपि (शयनं) तल्पं नोज्झितं नात्याजि । कीदृशम् । भङ्गिविषमोत्तरच्छदं भङ्गिभिस्तरङ्गैर्विषमं निम्नोन्नतमुत्तरीयं यत्र । तथा छिन्नतन्तुत्वात् (मध्यपिण्डितविसूत्रमेखलं) मध्ये पिण्डिता पुञ्जीभूता[1] मेखला यत्र । विपरीतसुरतवशात् चरणरागलाञ्छितं पादालक्तमुद्राङ्कितम् ॥८९॥

१. पुञ्जिता -ल.

स प्रियामुखेत्यादि ॥ ततः स असावीश्वरः विजयानिवेदनात् (दर्शनप्रणयिनां) दर्शनार्थिनाम् अदृश्यताम् (आजगाम) आययौ । ये हि भागवन्तमीक्षितुमायान्ति स्म तेषां विजयाख्या प्रतीहारी 'न दृश्यते देव' इत्युवाच । यतः तर्षवृद्धिजननं अभिलाषोद्दीपनं (प्रियामुखरसं) कान्ताधररसामृतं (दिवानिशम्) अनवरतं (सिषेविषुः) सेवितुकामः । रथोद्धता एता[1] ॥९०॥

१. एतानि रथोद्धतावृत्तानि -ल.

समदिवसेत्यादि ॥ तत्र गन्धमादनगिरौ समदिवसनिशीथम् अहोरात्राविभागेन

सङ्गिनः रममाणस्य (शंभोः) देवस्य साग्रम् अधिकं दिव्यम् ऋतूनां शतं (निशा इव) एकरात्रिरिव (अगमत्) जगाम ययौ। न चासौ सुरतसुखेभ्यः निधुवनोपजोषेषु (छिन्नतृष्णः) विगताभिलाषः बभूव अभवत्। यथा समुद्रान्तर्गतः ज्वलनः बडबानलः तज्जलेषूदधितोयेषु अपगतरुचिर्न भवति अद्याप्यप्रक्षीणत्वात्[१] । ऋतुशब्देनाऽत्र लक्षणया वर्षं लक्ष्यते । मालिनीवृत्तमूपमालङ्कारः । इति भद्रम्[२] ॥९१॥

१. अद्याप्यप्सु क्षयं कुरुते । -ल. २. 'भूयात्' - अपा -ल.

इत्यानन्ददेवायनिवल्लभदेवविरचितायां कुमारसम्भवविवृतावष्टमः सर्गः समाप्तः[३]।

३. इत्यानन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवलघुटीकायां अष्टमः सर्ग समाप्तः -ल. न., इति कुमारसंभवे अष्टमः सर्गः कृतिः श्रीमत्कालिदासस्येति शुभम् - मुशा.

**श्रीः**

